# ॥ प्रह्लादकृत नृसिंहस्तुतिः ॥

**श्रीप्रह्लाद उवाच**

ब्रह्मादयः सुरगणा मुनयोऽथ सिद्धाः
सत्त्वैकतानगतयो वचसां प्रवाहैः ।
नाराधितुं पुरुगुणैरधुनापि पिप्रुः
किं तोष्टुमर्हति स मे हरिरुग्रजातेः ॥ १ ॥

मन्ये धनाभिजन रूप तपः श्रुतौजस्–
तेजः प्रभाव बल पौरुष बुद्धि योगाः ।
नाराधनाय हि भवंति परस्य पुंसो
भक्त्या तुतोष भगवान् गजयूथपाय ॥ २ ॥

विप्राद्द्विषड्गुणयुतादरविंदनाभ
पादारविंदविमुखात्श्वपचं वरिष्ठं ।
मन्ये तदर्पित मनो वचने हितार्थ
प्राणं पुनाति स कुलं न तु भूरिमानः ॥ ३ ॥

नैवात्मनः प्रभुरयं निजलाभपूर्णो
मानं जनादविदुषः करुणो वृणीते ।
यद्यज्जनो भगवते विदधीत मानं
तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ॥ ४ ॥

तस्मादहं विगतविक्लव ईश्वरस्य
सर्वात्मना महि गृणामि यथा मनीषं ।
नीचोऽजया गुणविसर्गमनुप्रविष्टः
पूयेत येन हि पुमाननुवर्णितेन ॥ ५ ॥

सर्वे ह्यमी विधिकरास्तव सत्त्वधाम्नो
ब्रह्मादयो वयमिवेश न चोद्विजंतः ।
क्षेमाय भूतय उतात्मसुखाय चास्य
विक्रीडितं भगवतो रुचिरावतारैः ॥ ६ ॥

तद्यच्छ मन्युमसुरश्च हतस्त्वयाद्य
मोदेत साधुरपि वृश्चिकसर्पहत्या ।
लोकाश्च निर्वृतिमिताः प्रतियंति सर्वे
रूपं नृसिंह विभयाय जनाः स्मरंति ॥ ७ ॥

नाहं बिभेम्यजित तेऽतिभयानकास्य
जिह्वार्कनेत्र भ्रुकुटी रभसोग्र दंष्ट्रात् ।
आंत्रस्रजः क्षतजकेशर शंकुकर्णान्
निर्ह्रादभीतदिगिभादरिभिन्नखाग्रात् ॥ ८ ॥

त्रस्तोऽस्म्यहं कृपणवत्सल दुःसहोग्र
संसारचक्रकदनाद्ग्रसतां प्रणीतः ।
बद्धः स्वकर्मभिरुशत्तम तेऽंघ्रिमूलं
प्रीतोऽपवर्गशरणं ह्वयसे कदा नु ॥ ९ ॥

यस्मात्प्रियाप्रिय वियोग संयोग जन्म
शोकाग्निना सकलयोनिषु दह्यमानः ।
दुःखौषधं तदपि दुःखमतद्धियाहं
भूमन्भ्रमामि वद मे तव दास्ययोगं ॥ १० ॥

सोऽहं प्रियस्य सुहृदः परदेवताया
लीलाकथास्तव नृसिंह विरिंच गीताः ।
अंजस्तितर्म्यनुगृणन् गुणविप्रमुक्तो
दुर्गाणि ते पद युगालय हंससंगः ॥ ११ ॥

बालस्य नेह शरणं पितरौ नृसिंह
नार्तस्य चागदमुदन्वति मज्जतो नौः ।
तप्तस्य तत्प्रतिविधिर्य इहांजसेष्ट
स्तावद्विभो तनुभृतां त्वदुपेक्षितानां ॥ १२ ॥

यस्मिन्यतो यर्हि येन च यस्य यस्माद्
यस्मै यथा यदुत यस्त्वपरः परो वा ।
भावः करोति विकरोति पृथक्स्वभावः

संचोदितस्तदखिलं भवतः स्वरूपं ॥ १३ ॥

माया मनः सृजति कर्ममयं बलीयः
कालेन चोदितगुणानुमतेन पुंसः ।
छंदोमयं यदजयार्पित षोडशारं
संसारचक्रमज कोऽतितरेत्त्वदन्यः ॥ १४ ॥

स त्वं हि नित्यविजितात्मगुणः स्वधाम्ना
कालो वशीकृत विसृज्य विसर्गशक्तिः ।
चक्रे विसृष्टमजयेश्वर षोडशारे
निष्पीड्यमानमुपकर्ष विभो प्रपन्नं ॥ १५ ॥

दृष्टा मया दिवि विभोऽखिल धिष्ण्यपानां
आयुः श्रियो विभव इच्छति यांजनोऽयं ।
येऽस्मत्पितुः कुपितहास विजृंभितभ्रू
विस्फूर्जितेन लुलिताः स तु ते निरस्तः ॥ १६ ॥

तस्मादमूस्तनु भृतामहमाशिषोऽज्ञ
आयुः श्रियं विभवमैंद्रियमा विरिंच्यात् ।
नेच्छामि ते विलुलितानुरुविक्रमेण
कालात्मनोपनय मां निजभृत्यपार्श्वं ॥ १७ ॥

कुत्राशिषः श्रुतिसुखा मृगतृष्णिरूपाः
क्वेदं कलेवरमशेषरुजां विरोहः ।
निर्विद्यते न तु जनो यदपीति विद्वान्
कामानलं मधुलवैः शमयन् दुरापैः ॥ १८ ॥

क्वाहं रजःप्रभव ईश तमोऽधिकेऽस्मिन्
जातः सुरेतरकुले क्व तवानुकंपा ।
न ब्रह्मणो न तु भवस्य न वै रमाया
यन्मेऽर्पितः शिरसि पद्मकरः प्रसादः ॥ १९ ॥

नैषा परावर मतिर्भवतो ननु स्यात्
जंतोर्यथाऽऽत्मसुहृदो जगतस्तथापि ।

संसेवया सुरतरोरिव ते प्रसादः
सेवानुरूपमुदयो न परावरत्वं ॥ २० ॥

एवं जनं निपतितं प्रभवाहिकूपे
कामाभिकाममनु यः प्रपतन् प्रसंगात् ।
कृत्वाऽऽत्मसात्सुरर्षिणा भगवन् गृहीतः
सोऽहं कथं नु विसृजे तव भृत्यसेवां ॥ २१ ॥

मत्प्राण रक्षणमनंत पितुर्वधश्च
मन्ये स्वभृत्य ऋषिवाक्यमृतं विधातुं ।
खड्गं प्रगृह्य यदवोचदसद्विधित्सुः
त्वामीश्वरो मदपरोऽवतु कं हरामि ॥ २२ ॥

एकस्त्वमेव जगदेतममुष्य यत्त्वं
आद्यंतयोः पृथगवस्यसि मध्यतश्च ।
सृष्ट्वा गुणव्यतिकरं निजमाययेदं
नानेव तैरवसितस्तदनु प्रविष्टः ॥ २३ ॥

त्वं वा इदं सदसदीश भवांस्ततोऽन्यो
माया यदात्म परबुद्धिरियं ह्यपार्था ।
यद्यस्य जन्म निधनं स्थितिरीक्षणं च
तद्वै तदेव वसुकालवदष्टितर्वोः ॥ २४ ॥

न्यस्येदमात्मनि जगद्विलयांबु मध्ये
शेषेऽऽत्मना निजसुखानुभवो निरीहः ।
योगेन मीलित दृगात्मनि पीतनिद्र
स्तुर्ये स्थितो न तु तमो न गुणांश्च युंक्षे ॥ २५ ॥

तस्यैव ते वपुरिदं निजकालशक्त्या
संचोदित प्रकृति धर्मण आत्मगूढं ।
अंभस्यनंत शयनाद्विरमत्समाधे
र्नाभेरभूत्स्वकणिकावटवन्महाब्जं ॥ २६ ॥

तत्संभवः कविरतोऽन्यदपश्यमानः
त्वां बीजमात्मनि ततं स बहिर्विचिंत्य ।
नाविंददब्द शतमप्सु निमज्जमानो
जातेऽंकुरे कथमुहोपलभेत बीजं ॥ २७ ॥

स त्वात्मयोनिरति विस्मित आश्रितोऽब्जं
कालेन तीव्र तपसा परिशुद्धभावः ।
त्वामात्मनीश भुवि गंधमिवाति सूक्ष्मं
भूतेंद्रियाशयमये विततं ददर्श ॥ २८ ॥

एवं सहस्र वदनांघ्रि शिरःकरोरु
नासाद्य कर्ण नयनाभरणायुधाढ्यं ।
मायामयं सदुपलक्षित सन्निवेशं
दृष्ट्वा महापुरुषमाप मुदं विरिंचः ॥ २९ ॥

तस्मै भवान् हय शिरस्तनुवं च बिभ्रत्
वेद द्रुहावति बलौ मधुकैटभाख्यौ ।
हत्वाऽऽनयच्छ्रुतिगणांस्तु रजस्तमश्च
सत्त्वं तव प्रियतमां तनुमामनंति ॥ ३० ॥

इत्थं नृतिर्यगृषिदेवझषावतारैः
लोकान् विभावयसि हंसि जगत्प्रतीपान् ।
धर्मं महापुरुष पासि युगानुवृत्तं
छन्नः कलौ यदभवस्त्रियुगोऽथ स त्वं ॥ ३१ ॥

नैतन्मनस्तव कथासु विकुंठनाथ
संप्रीयते दुरित दुष्टमसाधु तीव्रं ।
कामातुरं हर्ष शोक भयैषणार्तं
तस्मिन् कथं तव गतिं विमृशामि दीनः ॥ ३२ ॥

जिह्वैकतोऽच्युत विकर्षति माऽवितृप्ता
शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ।
घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्ति

र्बह्व्यः सपत्न्य इव गेहपतिं लुनंति ॥ ३३ ॥

एवं स्वकर्म पतितं भववैतरण्यां
अन्योन्य जन्म मरणाशन भीत भीतं ।
पश्यंजनं स्वपर विग्रह वैर मैत्रं
हंतेति पारचर पीपृहि मूढमद्य ॥ ३४ ॥

को न्वत्र तेऽखिल गुरो भगवन् प्रयास
उत्तारणेऽस्य भव संभवलोप हेतोः ।
मूढेषु वै महदनुग्रह आर्तबंधो
किं तेन ते प्रिय जनाननुसेवतां नः ॥ ३५ ॥

नैवोद्विजे पर दुरत्ययवैतरण्याः
त्वद्वीर्य गायन महामृत मग्नचित्तः ।
शोचे ततो विमुखचेतस इंद्रियार्थ
माया सुखाय भरमुद्वहतो विमूढान् ॥ ३६ ॥

प्रायेण देव मुनयः स्व विमुक्तिकामा
मौनं चरंति विजने न परार्थ निष्ठाः ।
नैतान् विहाय कृपणान् विमुमुक्ष एको
नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये ॥ ३७ ॥

यन्मैथुनादि गृहमेधि सुखं हि तुच्छं
कंडूयनेन करयोरिव दुःख दुःखं ।
तृप्यंति नेह कृपणा बहु दुःख भाजः
कंडूतिवन्मनसिजं विषहेत धीरः ॥ ३८ ॥

मौन व्रत श्रुत तपोऽध्ययन स्व धर्म
व्याख्या रहो जप समाधय आपवर्ग्याः ।
प्रायः परं पुरुष ते त्वजितेंद्रियाणां
वार्ता भवंत्युत न वात्र तु दांभिकानां ॥ ३९ ॥

रूपे इमे सदसती तव वेदसृष्टे
बीजांकुराविव न चान्यदरूपकस्य ।
युक्ताः समक्षमुभयत्र विचिन्वते त्वां
योगेन वह्निमिव दारुषु नान्यतः स्यात् ॥ ४0 ॥

त्वं वायुरग्निरवनिर्वियदंबु मात्राः
प्राणेंद्रियाणि हृदयं चिदनुग्रहश्च ।
सर्वं त्वमेव सगुणो विगुणश्च भूमन्
नान्यत्त्वदस्त्यपि मनो वचसा निरुक्तं ॥ ४१ ॥

नैते गुणा न गुणिनो महदादयो ये
सर्वे मनः प्रभृतयः सहदेवमर्त्याः ।
आद्यंतवंत उरुगाय विदंति हि त्वां
एवं विमृश्य सुधियो विरमंति शब्दात् ॥ ४२ ॥

तत्तेऽर्हत्तम नमः स्तुति कर्म पूजाः
कर्म स्मृतिश्चरणयोः श्रवणं कथायां ।
संसेवया त्वयि विनेति षडंगया किं
भक्तिं जनः परमहंस गतौ लभेत ॥ ४३ ॥

॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कंधे नवमेऽध्याये श्री प्रह्लादकृत नृसिंहस्तुतिः संपूर्णः ॥